श्रीगणेशायनमः श्रीमत्कुलदेवतायैनमः अथषष्ठस्कंधव्याख्या राजोवाच हेभगवन्त्वयानिवृत्तिमार्ग-
श्चकथितः अधर्मलक्षणाः नरकाश्चस्वायंभुवंमन्वंतरंप्रियव्रतोत्तानपदोर्वंशः धरामंडलसंस्थानंचज्योतिषांविवराणांचस्थि
तिरुक्तासाश्रुताइदानींनरः नरकात्येननगच्छेत्तद्वक्तुमर्हसि श्रीशुकउवाच हेनृपइहमनउक्तिपाणिभिः कृतस्यअं
हसः मन्वाद्युक्तंप्रायश्चित्तंयदिनकुर्यात् तर्हिप्रेत्यनरकान्याति तस्मात् पापनिष्कृतौमृत्योः पूर्वमेवयतेत राजोवाच
जनः दृष्टश्रुताभ्यांराजदंडनरकपाताभ्यांआत्मनः अहितंपापंजानन्नपिप्रायश्चित्तानंतरंपापंकरोति अतः द्वादशाब्दादिप्रायश्चि-
त्तंकथम् किंच कदाचित्पापात्निवर्ततेक्कचित् तदेवपुनराचरति तस्यप्रायश्चित्तंकुंजरशौचवत् व्यर्थंभवति श्रीशुकउवा
च कृच्छ्रादिकर्मणापापनाशः समूलोनभवति संस्कारेणपुनः पापांतरस्यप्ररोहोभवत्येव किंतर्हिमुख्यंप्रायश्चित्तं ज्ञानंत-
त्तुशनैर्लभते पथ्यमेव अश्नतः पुरुषान्यथाव्याधयोनबाधंते तथानियमादिकर्ताशनैः तत्त्वज्ञानायसमर्थोभवति तपसाब्रह्म
चर्येणशमेनदमेनत्यागेनसत्यशौचाभ्यांयमनियमाभ्यांचधर्मज्ञाः देहवाक्बुद्धिजंपापंनाशयंति केचित्केवलयाभक्त्याअघंधु-
न्वंति यथाकृष्णार्पितप्राणः साधुसेवयाच अघवान् यथापूयेन तथातपआदिभिर्नआचरितानिप्रायश्चित्तानिनारायणपराङ्मु-
खंननिःपुनंति आपगाः सुराकुंभमिव यैः कृष्णपादारविंदयोः सकृन्मनः निवेशितंतेपूताः संतः यमंतद्भटांश्चनपश्यंति अत्रवि-
ष्णुयमयोर्दूतानांसंवादरूपंइतिहासंशृणु कान्यकुब्जेनगरे अजामिलनामाकश्चित्द्विजः दासीपतिः नष्टसदाचारः दासीसंस
र्गदूषितः आसीत् गर्ह्यवृत्त्यासः कुटुंबंअबिभ्रत् एवंतस्याः सुतान् लालयतः सतः अष्टाशीतिसमाभिः मितः कालः अगमत् तस्य १
दशपुत्राआसन् तेषुकनिष्ठः नारायणोनामआसीत् स्वयंजरठः सन्तंस्नेहेनलालयन्प्राप्तं अंतकंनवेद एवंमृत्युकालेउपस्थिते

सति पाशहस्तान् त्रीन् पुरुषान् दृष्ट्वा भीतः सन् उच्चैः नारायण इति तं आजुहाव तदाम्रियमाणस्य हरिकीर्तनं निशम्य विष्णु-
पार्षदाः एत्य दासीपतिं अजामिलं विकर्षतः यमदूतान् ओजसा वारयामासुः तदा यमदूताः सायुधान् विष्णुरूपधरान् दृष्ट्वाता
न् ऊचुः यूयं धर्मराजस्य शासनं प्रतिषेद्धारः के यूयं किं देवाः उपदेवाः वासिद्धाः वायतः सर्वे पद्मपत्राक्षाः चतुर्भुजाः पीनवाससः
किरीटिनः कुंडलिनः कमलमालिनः तरुणाः धनुर्निषंगादिधारिणः संतः यमदूतान् नः किमर्थं निषेधथ श्रीशुकउवाच
यमदूतैः एवमुक्ते विष्णुदूताऊचुः यूयं धर्मराजस्य यदि निर्देशकारिणः तर्हि धर्मस्य तत्त्वं ब्रूत यमदूताऊचुः वेदप्रणीतोयः
सः धर्मः तद्विपर्ययः अधर्मः वेदः साक्षात् नारायण इति शुश्रुम सूर्यः १ अग्निः २ खं ३ मरुत् ४ गावः ५ सोमः ६ संध्या ७ अहः ८ रा-
त्रिः ९ दिशः १० कं ११ कुः १२ कालः १३ धर्मः १४ एते देहिनः साक्षिणो भवंति एतैः अधर्मः विज्ञातः यथाकर्म तदनुरूपं दंडं सर्वे जीवाः
अर्हंति इत्यादि अयं अजामिलः अति शुचिः सन् पित्राज्ञया वनं गत्वा फलपुष्पसमित्कुशानादाय परावृत्तः मार्गे कंचित् मद्यपानेन
मत्तया दास्या नग्नया क्रीडंतं शूद्रं ददर्श तां दृष्ट्वा आत्मानं स्तंभयन्नपि कामवशंगतः मदनवेपितं मनः नियमितुं नशक्तोभूत् ततः
पित्र्येणार्थेन तां वशं आनीय सतीं स्वभार्यां त्यक्त्वा तया सह रेमे स्वधर्मं तत्याज असौ शास्त्रं उल्लंघ्य पापं कृतवान् अतः एनं दंडपा
णेः सकाशं नेष्यामः यत्र दंडेन शुद्ध्यति ६८ इतिषष्ठस्कंधे प्रथमोऽध्यायः १ श्रीशुकउवाच एवं ते भगवद्दूताः यमदू-
तवाक्यं उपधार्य तानाहुः विष्णुदूताऊचुः अहो कष्टं धर्मदृशां सभां अधर्मः स्पृशति यत्र निष्पापेषु वृथा दंडः ध्रियते ये
प्रजानां पितृवत् पालकाः तेषु यदि वैषम्यं स्यात् तर्हि प्रजाः कं शरणं यास्यंति यद्यदाचरति श्रेयानितरस्तत्तदीहते सयत्प्रमाणं
कुरुते लोकस्तदनुवर्तते लोकः यस्यां के शिरः आधाय स्वस्थः स्वपिति धर्माधर्मं नवेद यथा प शुः सः कथं द्रोग्धुमर्हति अयं तु-
ओ॰ ७ जलम्॰

 

जन्मकोट्यंहसांकृतनिर्वेशः यदाविवशः सन् हरेः नामव्याजहार एतेनैव अस्यपातकंदग्धं यदानारायणायेतिजगाद अहो स्ते-
नःसुरापोमित्रध्रुकब्रह्महागुरुतल्पगः स्त्रीराजपितृगोहंतायेच पातकिनोपरे १ सर्वेषांअघवतांइदमेवश्रेष्ठंप्रायश्चित्तं किं
तत् विष्णोर्नामोच्चारणमिति यथाहरेर्नाम्नाशुद्ध्यति तथाप्रायश्चित्तैर्न अतः कृतप्रायश्चित्तं एनंमानयत यदसौम्रियमाणः
भगवन्नामअग्रहीत् सांकेत्यंपारिहास्यंवास्तोभंहेलनमेववा वैकुंठनामग्रहणं अशेषाघहरंविदुः पतितः स्खलितोभग्नःसं
दष्टःतप्तःयः पुमान् हरिरिति आह सः यातनांनार्हति किंच गुरूणांलघूनांच पापानांगुरूणिलघूनिच प्रायश्चित्तानिमन्वादिभि
रुक्तानितैस्तपोदानादिभिस्तान्येवपापानिनश्यंतिनवासना सातुहरिकीर्तनादिनानश्यति अज्ञानात्ज्ञानाद्वाकीर्तितंहरिना
मपुंसः अघंदहेत् एधोग्निरिव यथाऔषधंभक्षितंसत् आरोग्यंकरोति एवंनामात्मकः मंत्रोपि श्रीशुकउवाच तेए
वंभगवद्धर्मंनिर्णायविप्रंयाम्यपाशात्निर्मुच्यमृत्योः मोचयामासुः तदा यमदूताः स्वस्थानंगत्वा यमायसर्वंन्यवेदयन् द्विजः
पाशात्मुक्तः विष्णुदूतान् ववंदे तंवक्तुमिच्छंतं ज्ञात्वाते अंतर्दधिरे अजामिलः तयोः संवादंश्रुत्वा आत्मनः अशुभंस्मरन् प-
श्चात्तापयुक्तः भगवतिभक्तिमान् सन् स्वात्मानंनिनिंद अहो अहं सतींस्त्रीं अनाथौपितरौ स्वधर्माचरणंच हित्वासुरापांअस
तींअगां अतः मांधिक् अस्तु सोहं नरकेपतिष्यामि मयाकिं स्वप्नंदृष्टं अहो येमांव्यकर्षन् ते क्व गताः येचमांव्यमोचयन् तेसि-
द्धाः क्व गताः दुर्भगस्यमेमंगलंभावि अतः हरेर्नामजिह्वयायातं सोहं ममाहमिति मायाबंधंहित्वातत्कीर्तनादिभिः शुद्धमनः
भगवतिधास्ये श्रीशुकउवाच एवंसाधूनांक्षणसंगेनजातनिर्वेदः सन् गंगाद्वारंगत्वादेवसदनेआसीनः आत्मनि २
मनः युयुजे ततः कालेनउपरतधीः सन्पुनः विष्णुदूतान् अद्राक्षीन् ननामच ततः गंगायांकलेवरंहित्वाविष्णुदूतस्वरूपंप्राप्तः

सन् तैः सह विमानं आरुह्य भगवत्समीपं ययौ एवं सर्वधर्मत्यक्तोपि विष्णुनाम गृणन् मुक्तः अतः मुमुक्षतां विष्णुकीर्तनादन्य-
त् बंधकृंतनंन यः इमं इतिहासं शृणुयात् कीर्तयेत् सः विष्णुलोके महीयते म्रियमाणो हरेर्नाम गृणन् पुत्रोपचारितं अजामिलो
प्यगाद्धामकिंपुनः श्रद्धया गृणन् ४९ इति षष्ठे द्वितीयः २ राजोवाच धर्मराजः स्वदूतवर्णितं निशम्य तान् प्रतिकिं
माह हे ऋषे यमस्य दंडभंगः कुतश्च पूर्वं न श्रुतः एतत् लोकसंशयं छिंधि श्रीशुकउवाच हे राजन् भगवद्दूतैः या-
म्याः प्रतिहतोद्यमाः संतः यमं विज्ञापयामासुः यमदूताऊचुः हे प्रभो जीवलोकस्य शास्तारः कति संति सेश्वराणां
भूतानां शास्ता त्वमेव एकोसि इदानीं चतुर्भिः सिद्धैः नवदंडभंगः कृतः ते आज्ञा च लंघिता अस्माभिः तवाज्ञया नरकान् नीय
मानं पातकिनं ते पाशान् छित्वा व्यमोचयन् ते के इदं त्वत्तः ज्ञातुं इच्छामः ये नारायण इति उक्ते सति भयं मा कुरु इति वदंतः
शीघ्रं आगताः श्रीशुकउवाच इति दूतैः पृष्टः सन् यमः हरिपदांबुजं स्मरन् तान् आह हे दूताः जगतः तस्थुषश्च म
त्तः परः अधीश्वरोस्ति यस्य अंशेभ्यः अस्य स्थित्यादयो भवंति किंच अहं महेंद्रः निर्ऋतिः प्रचेताः सोमः अग्निः ईशः पवनः
अर्कः विरिंचिः एवमादयः सर्वे यस्येच्छां न विदुः तस्य हरेः दूताः तद्रूपाः संतः हरिभक्तान् रक्षंति साक्षाद्भगवत्प्रणीतं धर्मं दे-
वादयो न विदुः तस्य सत्वे किं प्रमाणं वाच्यं स्वयंभूर्नारदः शंभुः कुमारः कपिलो मनुः प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्व-
यम् १ हे दूताः एते वयं द्वादश भगवद्धर्मं जानीमः यं ज्ञात्वा अमृतं अश्नुते हे पुत्रकाः हरेः नामोच्चारणमाहात्म्यं पश्यत अजामि
लोपि यन्नाम्ना मुक्तः भगवतः गुणकर्मनाम्नां कीर्तनं मिति यत् एतावतां पुंसां पापक्षयाय अलम् अजामिलोपि नारायण इति पुत्रं विक्रु
श्य अशुचिरपि मुक्तिं प्राप ये भगवति भक्तियोगं कुर्वंति ते मे दंडं नार्हंति ये च भगवंतं प्रपन्नाः ते हरेः गदया रक्षिताः तेषां दंडे वयं न प्रभवा

मकालोपिनसमर्थः येतु मुकुंदपादारविंदविमुखाः तान् आनयध्वं किंच येषांजिह्वाभगवद्गुणनामनवक्ति चेतश्चरणकमलंन स्मरति शिरः कृष्णायननमति तान् आनयध्वम् अस्मद्दूतैः यत् अन्याय्यं कृतं तत् भगवान् क्षम्यतांतस्मैपुरुषायनमः श्री शुकउवाच हेनृपविष्णोः कीर्तनं महत्सातकानामपिनाशकंप्रायश्चित्तंविद्धि यथा भक्त्यामनः शुद्ध्येत तथाव्रतादिभिर्न भगवद्भक्तः वृजिनावहेषु विषयेषु पुनः नरमते तच्चरणकंजास्वादरहितः कामहतःपुमान् आत्मनः पापंप्रमार्ष्टुं कर्मैवप्रायश्चित्तरूपं ईहते कर्मणापुनरपि पापंस्यादेव इत्थंयमगदितंश्रुत्वाततः प्रभृति दूताः अच्युताश्रयंजनं द्रष्टुंबिभ्यतिस्म इमंइतिहासंमलये आसीनः भगवान् अगस्त्यः हरिं अर्चयन् कथयामास ३५ इतिषष्ठेतृतीयः ३ राजोवाच देवासुरनृणांनागानांमृगपक्षिणांसर्गः त्वयासमासेनस्वायंभुवेमन्वंतरे उक्तः तस्यविस्तारंश्रोतुमिच्छामि श्रीशुकउवाच यदादशप्रचेतसःअंतः समुद्रात् निर्गताःसंतः द्रुमैर्व्याप्तांपृथ्वींददृशुः तदाद्रुमान् दग्धुं मुखतः वायुं अग्निंचससृजुः तदावृक्षान्दह्यमानान् दृष्ट्वासोमः एत्यतान् उवाच हेमहाभागाः यूयंप्रजानांपतयः प्रजावृद्धिकर्तारः स्थ अतः द्रुमान् दग्धुंयोग्याः न अहोहरिः वनस्पतीन् ओषधींश्च प्रजानांअन्नंससर्ज यूयंचप्रजासर्गायपित्राआदिष्टाःसंतः कथंवृक्षान्दग्धुमर्हथ अतः सतांमार्गंआतिष्ठत कोपंयच्छत किंच हरिः भूतानांअंतर्देहेषु आस्ते सर्वंतद्धिष्ण्यंईक्षध्वम् एवंकृतेभगवान् तुष्टोभविष्यति दग्धैः द्रुमैः अलम् शेषाणांयुष्माकंचशिवं अस्तु एषाप्रम्लोचायाः कन्यावार्क्षीनामपत्नीत्वे प्रतिगृह्यतांइत्यामंत्र्यतान् दत्वासोमः ययौ तेधर्मेणतांउपयेमिरे तेभ्यःतस्यांदक्षः अभवत् सः दक्षःपूर्वंदेवासुरमनुष्यादीन् मनसैव असृजत् तांसृष्टिं असमृद्धांआलोक्य बहुसृष्ट्यर्थंविंध्याद्रिसमीपे अघमर्षणतीर्थे एत्य तत्रतपसाहरिंतोषयन् सन् हंसगुह्येन स्तोत्रेणहरिं अस्तौषीत् दक्षउवाच परायजीवमाययोर्नि-

यंत्रेजीवैरदृष्टस्वरूपायस्वप्रकाशायनमः किंच जीवः अस्मिन्देहेसन्नपि अत्रैववसतः यस्यसरव्यंनजानाति तस्मैमहेशाय
नमस्करोमि किंच अयंजीवःस्वस्वरूपंइंद्रियवर्गंदेवतावर्गंच एतत्त्रयंवेत्ति तथापियन्नवेदतंसर्वज्ञं अनंतं ईडे किंच यदादर्शी
नस्मृत्योनीशात् मनसः समाधिर्भवति तदायःस्वरूपज्ञानेनप्रतीयतेतस्मै हंसायनमः किंच विवेकिनः यंमनीषयाध्यायंति सः
विश्वरूपः ममप्रसीदतां किंच वचसाउक्तंबुध्यादिभिः निरूपितंयत् तत् यस्य स्वरूपंभवति तस्मैनमः किंच यः भगवान् प्राकृ
तनामरूपरहितोपि पादमूलंभजतां अनुग्रहार्थंनामानि रूपाणि भेजे सः मे प्रसीदतु श्रीशुकउवाच इतिस्तुतः भग-
वान् गरुडांसेकृतपादः अष्टभुजः शंखचक्रासिचर्मेषुधनुष्पाशगदाधरः पीतवासाः घनश्यामः नारदनंदाद्यैर्वृतः सिद्धगंध
र्वादिभिः स्तूयमानः तत्र आविरासीत् तंदृष्ट्वाप्रजापतिः भूमौदंडवत् ननाम तदा सर्वभूतानांचित्तज्ञः जनार्दनः प्रजाकामुकं
दक्षं उवाच हेप्राचेतसभवान् तपसासंसिद्धः ते अहं प्रीतोस्मि ब्रह्माभवोभवंतश्च सर्वेभूतानांभूतिहेतवः ममविभूतयः अ
तः पंचजनस्य प्रजापतेः दुहिताअसिक्नीनाम्नीपत्नीत्वेप्रगृह्यताम् त्वंमैथुनधर्मः सन् मैथुनव्यवायधर्मिण्यांतस्यांप्रजासर्गं
भूरिशः भावयिष्यसि त्वत्तः अग्रेसर्वाः प्रजाः मन्मायया मैथुनधर्मेणैव भविष्यंति इतिदक्षंउक्त्वाहरिः तत्रैव अंतर्दधे ५४
इतिषष्ठेचतुर्थः ४ श्रीशुकउवाच सः दक्षः पांचजन्यां तस्यां हर्यश्वसंज्ञान् अयुतंपुत्रान् अजनयत् हेनृपते हर्यश्वाः
प्रजासर्गेपित्राप्रोक्ताः संतः प्रतीचींदिशंययुः तत्रनारायणसरसि प्रजाविवृद्धये उग्रंतपः तेपिरे तान् नारदः एत्यउवाच हेहर्य
श्वाः यूयंभुवः अंतं १ तथाएकपुरुषंराष्ट्रं २ अदृष्टनिर्गमंबिलं ३ बहुरूपांस्त्रियं ४ पुंश्चलीपतिंपुरुषं ५ उभयतोवाहांनदीम् ६ पंच
विंशतेः गृहं ७ चित्रकथंहंसं ८ क्षौरपव्यंस्वयंभ्रमि ९ विपश्चितःस्वपितुरादेशं १० एतानिअविज्ञायकथंसर्गंकरिष्यथ श्रीशुक

उवाच   हर्यश्वाः तन्निशम्य स्वधियादेवर्षेः वाचः कूटं विचारितवंतः भुवः अंतमितिलिंगशरीरनाशं अदृष्ट्वा असत्कर्मभिः किं
भवेत् एकंईश्वरंम् २ ब्रह्मरजआदिगुणैः अन्वितबुद्धेः विवेकम् ४ बुद्धिसंगभ्रंशितैश्वर्यं संसरंतंजीवम् ५ सृष्ट्यप्ययकरींमायाम्
६ पंचविंशतितत्त्वानांआश्रयः अंतर्यामीयः तम् ७ ईश्वरप्रतिपादकंशास्त्रंबंधमोक्षानुदर्शनम् ८ कालचक्रं भ्रमणात्मकंजगदा
कर्षकं ९ शास्त्ररूपपितुः आदेशम् १०  इतिएवंविचार्यतंपरिक्रम्य अपुनरावृत्तिं मार्गंप्रययुः ततः दक्षः नारदात् पुत्राणांनाशंनि
शम्यसुप्रजास्त्वंशुचांपदं इतिविचारयन् अशोचत् पुनः ब्रह्मणासांत्वितः दक्षः शबलाश्वसंज्ञान् सहस्रशः पुत्रान् अजनयत्
तेपिप्रजासर्गेपित्रा आदिष्टाः संतः नारायणसरः जग्मुः यत्रस्वपूर्वजाः सिद्धाः तत्सरसिस्नात्वा परब्रह्मजपंतः तपस्तेपुः किंच ओं-
नमोनारायणायेतिमंत्रं अभ्यसंतः विष्णुं आराधयामासुः हे राजेंद्र तानपि नारदः एत्यवाचः कूटानि पूर्ववत् उवाच हे शबलाश्वाः
भ्रातॄणांपदवीं अवलोकयत इत्याद्युक्त्वा नारदः ययौ तेपिभ्रातॄणांमार्गं अन्वगमन् एतस्मिन् काले दक्षः बहून् उत्पातान् पश्यन् पू
र्ववत् नारदकृतंपुत्रनाशंउपाशृणोत् ततो दक्षः नारदायचुक्रोध तत्काले नारदंउपलभ्य आह अहो असाधो साधुचिन्हेन त्वया अ
र्भकाणांभिक्षोर्मार्गः प्रदर्शितः त्रिभिः ऋणैः अमुक्तानांउभयोः लोकयोः विघातः कृतः एवंत्वंनिर्दयः बालानांमतिभित् निर्लज्जः स
न् हरेः पार्षदमध्ये कथंचरसि ननुजनः विषयदुःखं अननुभूय कथंनिर्विद्येत कर्मकर्तॄणांत्वयाविघ्नंकृतम् अतः ते अभद्रंस्यात्
किंच यतः पुत्राणांत्वयास्थानभ्रंशः कृतः अतः भ्रमतः ते स्थानंनभवेत्     श्रीशुकउवाच     साधुसंमतः नारदः प्रतिशप्तुंसमर्थो
पि तच्छापंजगृहे ४४     इतिषष्ठेपंचमः ५     श्रीशुकउवाच     ततः ब्रह्मणासांत्वितः दक्षः षष्टिंकन्याः जनयामास तत्रधर्मा- ४
य १० कश्यपाय १३ इंदोः २७ भूतस्य २ अंगिरसः २ कृशाश्वाय २ तार्क्ष्यइतिनामांतरंप्राप्ताय कश्यपाय ४ एवं ६० तत्रधर्मसंततिमा

ह भानुर्लंबा ककुप्जामिर्विश्वासाध्यामरुत्वती वसुर्मुहूर्ता संकल्पा धर्मपत्न्यः स्तत्तान् शृणु ४ भानोः १ देवर्षभः तस्यइंद्रसे-
नः लंबायाः २ विद्योतः ततस्तत इत्नवः ककुभः ३ संकटः तस्यकीकटः ततः दुर्गाभिमानिनोदेवाः जाम्याः ४ स्वर्गः ततः नंदी विश्वा
याः ५ विश्वेदेवाः तेअप्रजाः साध्यायाः ६ साध्योगणः ततः अर्थसिद्धिः मरुत्वत्याः ७ मरुत्वान्जयंतश्च सईश्वरांशः मुहूर्तायाः
८ मौहूर्तिकाः देवगणाः संकल्पायाः ९ संकल्पः ततःकामः वसोः १० अष्टौवसवः तेषांनामानिशृणु द्रोणः प्राणोध्रुवो ऽ र्कोग्निर्दो
षोवसुर्विभावसुः तेषांवसूनांवंशमाह द्रोणस्य १ अभिमत्यांहर्षशोकभयादयः आसन् प्राणस्य २ उर्जस्वत्यांसहआयुःपु
रोजवाः ध्रुवस्य ३ धरण्यांविविधाःपुरः अर्कस्य ४ आसनायांतर्षादयः अग्नेः ५ वसोर्धारायांद्रविणकादयः कृत्तिकायांस्कं
दश्च स्कंदात् विशाखादयः दोषस्य ६ शर्वर्यांशिशुमारः वसोः ७ आंगिरस्यांविश्वकर्मा ततः चाक्षुषोमनुः ततःविश्वेसाध्याः
विभावसोः ८ उषायांव्युष्टः रोचिषम् आतपइति आतपात् दिवसोजातः भूतस्यसरूपायांरैवतः अजः भवः भीमः वामः उ-
ग्रः वृषाकपिः अजैकपात् अहिर्बुध्न्यः बहुरूपः महान् अन्यस्यां एकादशरुद्राणांपार्षदाः भूतविनायकप्रेतादयः अंगिर
सः स्वधापत्न्यां १ पितरः सत्याम् २ अथर्वांगिरसोवेदः जातः कृशाश्वः अर्चिषि १ धूम्रकेशम् धिषणायाम् २ देवलम् देवशिरसम्
वयुनम् मनुंजनयामास तार्क्ष्यस्यविनतायाम् १ गरुडः अरुणश्च कद्रूसंज्ञायाम् २ नागाः पतंग्याम् ३ पतगाः यामिन्यांशलभा
जाताः चंद्रस्यकृत्तिकादिस्त्रियः २७ सः दक्षशापात् क्षयरोगी अनपत्यः सःदक्षंप्रसाद्यकलाः लेभेनत्वपत्यानि अथकश्यपप
त्नीनांनामानिशृणु अदितिर्दितिर्दनुः काष्ठा अरिष्टा सुरसाइला मुनिः क्रोधवशा ताम्रासुरभिः सुरमातिमिः २५ तिमेः १ यादो-
गणाः सरमायाः २ श्वापदः सुरभेः ३ महिषाः गावः अन्येद्विशफाश्चताम्रा ाः ४ श्येनगृध्राद्याः मुनेः ५ अप्सरोगणाः क्रोधव

शायाः ६ दंदशूकादिसर्पाः इलायाः ७ भूरुहाः क्रूरसायाः ८ यातुधानाः अरिष्टायाः ९ गंधर्वाः काष्ठायाः १० पंचनखैकशफादयः
दनोः ११ एकषष्टि सुताः द्विमूर्धादयः तत्र मुख्याः १८ द्विमूर्द्धा १ शंबरः २ अरिष्टः ३ हयग्रीवः ४ विभावसुः ५ अयोमुखः ६ शंकु-
शिराः ७ स्वर्भानुः ८ कपिलः ९ अरुणः १० पुलोमा ११ वृषपर्वा १२ एकचक्रः १३ अनुतापनः १४ धूमकेशः १५ विरूपाक्षः १६ वि-
प्रचित्तिः १७ दुर्जयः १८ इति स्वर्भानोः सुप्रभां कन्यां नमुचिः उवाह वृषपर्वणः शर्मिष्ठाम् ययातिः उवाह दनोः पुत्रः वैश्वानरः
तस्य कन्याः ४ उपदानवी १ हयशिरा २ पुलोमा ३ कालका ४ हिरण्याक्षः उपदानवीम् क्रतुः हयशिराम् ब्रह्मप्रेरितः कश्यपः पुलो
मां कालकां च उवाह तयोः पौलोमाः कालकेयाः षष्टि सहस्राणि निवातकवचाश्च जाताः तान् अर्जुनः स्वर्गतः सन् जघान विप्र-
चित्तिः सिंहिकायां राहुज्येष्ठं केतुशतं अजीजनत् अथ अदितेः वंशं शृणु यत्र नारायणः अंशेन अवतरत् अदितेः द्वादशादि
त्याः विवस्वानर्यमा पूषा त्वष्टाथ सविता भगः धाता विधाता वरुणः मित्रः शक्र उरुक्रमः ३७ तत्र विवस्वतः १ पत्नी संज्ञा श्राद्ध
देवं मनुम् यमम् यमुनां च सुषुवे सैव वडवा भूत्वा नासत्यौ सुषुवे पुनः सैव छाया शनैश्चरम् सावर्णिम् मनुम् तपतीं कन्यां च
सुषुवे या संवरणं वव्रे अर्यम्णः २ मातृकायां चर्षणयः पुत्राः पूषा ३ अनपत्या त्वष्टुः ४ दैत्यानुजा रचना नाम भार्या तस्यां सन्नि
वेशः विश्वरूपश्च जज्ञे बृहस्पतिना त्यक्ताः देवाः द्विषतां दौहित्रमपि विश्वरूपं पौरोहित्याय वव्रिरे ४३ इति षष्ठ स्कंधे ष
ष्ठोऽध्यायः ६ राजोवाच स्वशिष्याः देवाः बृहस्पतिना कुतस्त्यक्ताः देवैः किं अपराद्धम् एतत् आचक्ष्व
श्रीशुकउवाच इंद्रः त्रिभुवनैश्वर्यमदेन मत्तः सन् देवगंधर्वमुनिविद्याधराप्सरोभिः सर्वैः युक्तः सर्वराजचिह्नैः
पौलोम्या सह विराजमानः अध्यासने स्थितः सभागतं गुरुं पश्यन्नपि नोच्चचाल ततः गुरुः गृहं ययौ ततः इंद्रः स्वात्मानं ५

गर्हयामास मांधिक् अस्तु अहो ऐश्वर्यमत्तेन मयासदसि गुरुः तिरस्कृतः यत्प्रसादात् इयंश्रीः अतः अहंतं प्रसादयिष्ये एवंचिंतयतः सतः बृहस्पतिः आत्ममायया अंतर्धानंगतः इंद्रः देवैः सह गुरुं अप्राप्य शर्म न अलभत तच्छ्रुत्वा सर्वे दैत्याः शुक्रं आश्रित्य देवान् जिग्युः तदा सेंद्राः देवाः ब्रह्माणं शरणं जग्मुः तदा ब्रह्मा उ० हे देवाः भवद्भिः अभद्रं कृतं ब्राह्मणावमानात् ऐश्वर्यभ्रष्टाः जाताः हे मघवन् संप्रति दैत्याः शुक्रं आराध्य मत्स्थानमपि ग्रहीष्यंति तस्मात् आशु विश्वरूपं भजत यदि अस्य कर्म क्षमिष्यध्वं तर्हि सः भवदर्थान् विधास्यते श्रीशुकउवाच इतिब्रह्मोदितं श्रुत्वा लाष्टुं गत्वा देवा ऊचुः हे तात वयं अतिथयः प्राप्ताः नः कामः संपाद्यताम् पुत्राणांपितृशुश्रूषणं परोधर्मः यतः गुरुः देवस्य मूर्तिः पिताब्रह्मणोमूर्तिः भ्राता इंद्रस्य मूर्तिः माता क्षितेर्मूर्तिः भगिनीदयायाः मूर्तिः अतिथिः धर्मस्य मूर्तिः अग्नेः अभ्यागतो मूर्तिः सर्वभूतानि श्रीविष्णोर्मूर्तिः अतः अस्माकं पितॄणां दुःखं तपसा अपनयन् सन् अस्मदाज्ञां कर्तुं अर्हसि त्वांउपाध्यायं वृणीमहे यथा तव तेजसा शत्रून् विजेष्यामः कार्येषु कनिष्ठवंदनं न निंदंति मंत्रेभ्योन्यत्र वयोज्येष्ठ्यस्य कारणं नतु मंत्रेषु अतः मंत्रदातृत्वेन त्वमेव ज्येष्ठस्य भविष्यसि एवं देवैः पौरोहित्ये प्रार्थितः विश्वरूपः तान् आह विश्वरूपउवाच हे देवाः स्वपुण्यनाशकं पौरोहित्यं कथंनु करोमि तथापि गुरुभिः प्रार्थितं प्राणैः अर्थैश्च साधये

श्रीशुकउवाच विश्वरूपः एवं प्रतिज्ञाय देवैः वृतः सन् पौरोहित्यं चक्रे शुक्रविद्यया गुप्तां दैत्यश्रियं वैष्णव्या विद्यया आछिद्य महेंद्राय अदात् इंद्रः यया विद्यया गुप्तः सन् असुरचमूः जिग्ये तां विद्यां विश्वरूपः इंद्राय प्राह ४०

इतिषष्ठे सप्तमः ७ राजोवाच सहस्राक्षः यया गुप्तः सन् शत्रून् निर्जित्य त्रैलोक्यश्रियं बुभुजे हे भगवन् तन्ना

रायणमयंवर्ममम आस्याहि श्रीशुकउवाच ततः त्वाष्ट्रः महेंद्राय नारायणाख्यं वर्माह तत् शृणु विश्वरूप
उवाच धौतांघ्रिपाणिराचम्य उदङ्मुखः वाग्यतः अष्टाक्षर द्वादशाक्षर मंत्राभ्यां स्वांगकरयोः न्यासं कृत्वा नारायण
मयं वर्म बध्नीयात् एवं न्यासं कृत्वा आत्मानं ईश्वर रूपं ध्यात्वा इदं नारायण कवचं उदाहरेत् ॐ हरिः मम सर्व रक्षां विदध्यात्
मत्स्यमूर्तिः जलेषु मां रक्षतु स्थलेषु वामनः खे त्रिविक्रमः दुर्गम स्थानेषु नृसिंहः अध्वनि वराहः गिरिशिखरेषु परशुरामः प्र
वासे भरताग्रजः अभिचारादिधर्मात् नारायणः नरः गर्वात् दत्तः योगभ्रंशात् कपिलः कर्मबंधात् सनत्कुमारः मदनात् हय-
शीर्षा पथि देवहेलनात् नारदः देवपूजाच्छिद्रात् कूर्मः निरयात् धन्वंतरिः अपथ्यात् ऋषभः द्वंद्वभयात् यज्ञः जनापवादात्
बलभद्रः कृतांतात् शेषः सर्पगणात् द्वैपायनः अप्रबोधात् बुद्धः पाखंडगणात् कल्किः कलिकालमलात् केशवः गदया प्रातः
गोविंदः आसंगवम् नारायणः प्राण्हे विष्णुः मध्यंदिने मधुहा अपराह्णे माधवः सायं हृषीकेशः दोषे पद्मनाभः आनिशीथम्
श्रीवत्सधामा अपररात्रे जनार्दनः प्रत्यूषे दामोदरः अनुसंध्यम् विश्वेश्वरः प्रभाते हे चक्र मे रिपुसैन्यं दंदग्धि २ हे गदे कूष्मां
डादीन् चूर्णय चूर्णय हे पांचजन्य यातुधानादीन् विद्रावय विद्रावय हे खड्ग मे अरिसैन्यं छिंधि छिंधि हे चर्मन् द्विषां चक्षूं-
षि छादय हर भगवन्नाम रूपादि कीर्तनात् श्रेयोनाशकाः क्षयं यांतु गरुडः कृच्छ्रेभ्यो रक्षतु आपद्भ्यो हरेर्नाम रूपादीनि-
पार्षदाश्चनः बुद्ध्यादीन् पांतु सर्वरूपैः हरिः सदा पातु विदिक्षु दिक्षु ऊर्ध्वमधः समंतात् अंतः बहिश्च नारसिंहः पातु हे मघ
वन् नारायणाख्यं वर्म ते आख्यातं येन शत्रून् विजेष्यसि यः इदं धारयेत् सः भयात् मुच्यते एतद्धारयतः कुतश्च भयं
न भवेत् पुरा कश्चित् कौशिको द्विजः इमां विद्यां धारयन् योगधारणया मरुद्देशे स्वांगं जहौ तस्योपरि चित्ररथः गंधर्वः

विमानेनययौ सः सद्यः सविमानः गगनात् न्यपतत् पुनः वालखिल्यवचनात् अस्थीन्यादाय प्राची सरस्वत्यां प्रास्य स्नात्वा स्व
धामययौ श्रीशुकउवाच यः इदंशृणुयात् धारयतिचसः सर्वतो भयात् मुच्यते इंद्रः विश्वरूपात् एतांविद्यांप्राप्य
मृधे असुरान् जित्वात्रैलोक्यलक्ष्मीं बुभुजे ४० इतिषष्ठेऽष्टमः ८ श्रीशुकउवाच विश्वरूपस्यत्रीणिशिरांसि
सोमपीथम् १ सुरापीथम् २ अन्नादम् ३ इति आसन् सः देवेभ्यः प्रत्यक्षंहविर्भागंददौ मातृस्नेहेन दैत्यान् परोक्षंददौ इं-
द्रः एवंतस्य विपर्यासं ज्ञात्वा असुरेभ्यो भीतः सन् तस्यशीर्षाणि अच्छिनत् तत्र सोमपीथात् कपिंजलः आसीत् सुरापी
थात् कलविंकः अन्नादात् तित्तिरिः इंद्रः ब्रह्महत्यां अंजलिनाजग्राह संवत्सरांते आत्मशुद्धये ब्रह्महत्यां चतुर्विधाविभ
ज्य भूम्यंबुद्रुमयोषिद्भ्यः ददौ तत्र भूमिः खातपूरवरेण द्रुमाः छेदविरोहेण स्त्रियः काममवरेण आपः द्रव्यभूयस्त्ववरेण एवंज
गृहुः तस्याः स्वरूपं भूम्यादिषु ऊखरं १ निर्यासः २ रजोदर्शनं बुद्बुदफेनौ इति हतपुत्रः त्वष्टा इंद्रशत्रो विवर्द्धस्व इतिहोमंचकार
अथदक्षिणाग्नेः कृतांतइवघोरदर्शनः पुरुषः उत्थितः सः प्रतिदिवसं इषुक्षेपमात्रमानंवर्द्धमानः तंभयंकरंदग्धशैलसंकाशंतप्त
ताम्रशिखाश्मश्रुं पदा महींचालयंतं जिह्वयाऋक्षाणिलिहंतं भुवनत्रयंग्रसतारौद्रदंष्ट्रेण मुखेनजृंभमाणं ईदृशंतंदृष्ट्वात्रस्ताः
लोकाः दुद्रुवुः येन इमेलोकाः व्याप्ताः सः वृत्रइतिप्रोक्तः इंद्राद्याः देवाः तं एत्य स्वैः स्वैः दिव्यास्त्रौघैः निजघ्नुः सः तानिशस्त्राण्यस्त्रा
णि अग्रसत् तदासर्वे देवाः विषण्णाः संतः आदिपुरुषंउपतस्थुः देवाऊचुः वयंब्रह्मादयः उद्विजंतः संतः यस्मै बलिंहरा
म सोपिकालः यस्मात् बिभेति तस्मात् परमेश्वरात् अस्माकंरक्षणमस्तु किंच स्वेनैवलाभेन परिपूर्णकामं तंपरमेश्वरंविना
अपरं यः शरणार्थं उपसर्पति सोऽज्ञः यतः शुनः पुच्छेनसिंधुंतर्तुं इच्छति किंच यस्यमत्स्यस्य शृंगे पृथ्वींनावं बध्वासत्यव्रतः
ओ०७ लोकापवादपरिहाराय

संकटं ततार सः मत्स्यमूर्तिः अस्मान् रक्षिष्यति पुरा ब्रह्मापि प्रलयोदके नाभिकमलात् पतितः सन् येन ततार सः ईश्वरः नः ता
रकोस्तु किंच यः ईशः स्वमायया नः ससर्ज तान् नः शत्रुभिः अर्द्यमानान् दृष्ट्वा देवादिषु कृतावतारः सन् पाति तं आत्मदेवं शरणं
व्रजेम सः ईश्वरः नः शं विधास्यति श्रीशुकउवाच इति तेषां उपतिष्ठतां सतां प्रतीच्यां दिशि शंखचक्रगदाधरः हरिः आ
विरभूत् श्रीवत्सकौस्तुभौ विना स्वतुल्यैः षोडशभिः सुनंदादिभिः परिसेवितं तं दृष्ट्वा दंडवत्पतिताः संतः शनैः उत्थाय तुष्टुवुः

देवाऊचुः यज्ञवीर्याय शोभन बहुनाम्ने ते नमः हे धातः तव निर्गुणस्वरूपं अर्वाचीनः कः वेदितुं अर्हति अतः केवलं नमो
स्तु हे भगवन् नारायण परमकारुणिक सर्वेश्वर लक्ष्मीनाथ ते नमोस्तु हे भगवन् तवायं क्रीडायोगः दुर्ज्ञेयः यतः त्वं निर्गुणोपि
विश्वं मायया सृजसि पासि हरसि अथ भवान् देवदत्तवत् पारतंत्र्येण शुभाशुभयोः फलं उपादत्ते अहोस्वित् आत्मारामः सन्
उदासीनः साक्षितया वर्तते इति वयं न विद्मः हे भगवन् एतदुभयं त्वयि न विरुद्धम् भगवति अनंतगुणे त्वयि कोनु कर्तृत्वादिर
र्थो न संभवति न कोपि हे हरे यः त्वं समविषममतीनां अनुसरसि स एव सर्वेश्वरः त्वं पर्यवशोषितोसि हे मधुमथन परमभा
गवता एते त्वयि निर्वृतमनसः संतः त्वत्पादांभोजानुसेवां कथं विसृजंति किंच हे त्रिविक्रम दितिजदनुजादयः तवैव विभूतयो
पि तासां अयं उद्यमकालो न भवति इति मत्वा दंडं दधर्थ एवमेव त्वाष्ट्रं जहि यदि मन्यसे प्रथमं तावत् त्वदीयानां तव नतानां अस्मा
कं अंतस्तापं शमयितुं अर्हसि हे भगवन् सर्वसाक्षिणः साक्षात् परब्रह्मणः परमात्मनः तव अस्माभिः किं विज्ञापनीयं अस्ति
अस्मदभिप्रायस्तु त्वया ज्ञात एव अतः भगवतः तव चरणकमलछायां यत्कामेन प्राप्ताः वयं तत्कार्यं स्वयमेव संपादय हे कृ-
ष्ण येन नः तेजोस्त्रायुधानि ग्रस्तानि तं त्वाष्ट्रं जहि हंसाय बुद्ध्यादिसाक्षिणे कृष्णाय आदिमूर्त्याय हरये ते नमः श्रीशु

कउवाच एवंदेवैःस्तुतः हरिः तान् उवाच हेदेवाः मयिप्रीते सति दुरापंकिमस्ति तथापिमयि एकांतमतिः पुरुषःमत्तो
न्यत् नवांच्छति अथापि हे मघवन् वः भद्रमस्तु अथदध्यंचंऋषिं गत्वा तस्य शरीरंयाचत सः दध्यङ् अश्वशिरोनामप्रसिद्धं
ब्रह्म प्रवर्ग्यंच अधिगतः ततः अश्विभ्यांसः उपदिदेश अश्विनोर्जीवन्मुक्तत्वंव्यधात् दध्यङ् श्रीनारायणकवचं ज्ञानवान्सः
त्वष्ट्रे प्रादात् त्वष्टाविश्वरूपाय यत् त्वंविश्वरूपात् धृतवानसि किंच सः दध्यङ् धर्मज्ञः भवद्भिर्याचितः सन् स्वांगानियुष्म-
भ्यंदास्यति तदस्थिभिः विश्वकर्मविनिर्मितः आयुधश्रेष्ठो वज्रो भविष्यति येन वृत्रशिरः हरिष्यसि ततः तेजोस्त्रायुधसं
पदः भूयः प्राप्स्यथ मत्परान्केपिनहिंसंति अतोवः भद्रमेवास्तु ५५ इतिषष्ठेनवमः ९ श्रीशुकउवाच एवंइंद्रं
समादिश्य भगवान् अंतर्दधे तथादेवैः याचितः दधीचिः धर्मश्रोतुकामः प्रत्याचक्षाण इव उवाच हे वृंदारकाः यूयंशरीरिणां
मृत्युदुःखंनजानीथ देहिनांदेहः अतिप्रियः अतः शिक्षमाणायापि विष्णवे ईदृशंदेहं दातुं कः उत्सहेत देवाऊचुः हेब्रह्मन्
भूतानुकंपिनां पुण्यश्लोकेड्यकर्मणांभवद्विधानांपुंसां दुस्त्यजं किंनु ननुस्वार्थपरोलोकः परसंकटंनवेद यदिवेदतर्हिनया
चेत इत्यादिश्रुत्वादधीचिरुवाच हेदेवाः धर्मश्रोतुकामेन मयायूयं प्रत्युदाहृताः अथापिमांत्यक्ष्यंतंदेहंत्यजामि गृह्यताम्
हेदेवाः यः अध्रुवेणदेहेनधर्मयशश्च भूतदयया न संपादयेत् सः सर्वैः शोच्यः श्रीशुकउवाच एवमुक्त्वा आथर्व-
णः परेब्रह्मणि क्षेत्रज्ञं एकीकुर्वन् तनुंजहौ अथइंद्रः तदस्थिभिः विश्वकर्मणानिर्मितं वज्रं उद्यम्य देवैः वृतः गजेंद्रस्थितः मुनिगणैः
स्तुतः सन् त्रैलोक्यंहर्षयन्निव वृत्रंछेत्तुं अभ्यद्रवत् ततः क्रूराणांदैत्यैः सह रणः त्रेतामुखे नर्मदायां अभवत् रुद्रैः वसुभिः आदित्यैः
अश्विभ्यांपितृवन्हिभिः इत्यादिदेवैः सहइंद्रं दृष्ट्वा वृत्रपुरःसराः असुराः नासहंत ततः नमुचिः शंबरः अनर्वाद्विमूर्द्धाऋषभः अंबरः हय-

ग्रीवः शंकुशिराः विप्रचित्तिः अयोमुखः पुलोमा वृषपर्वा प्रहेतिः हेतिः उत्कलः सामान्यादयः दैत्याः दानवाः यक्षाः रक्षांसिच इंद्रसे
नाग्र्यं प्रतिषिध्य असंभ्रांताः संतः शस्त्रास्त्रैर्विबुधान् अवाकिरन् तदा शरजालैः छन्नाः देवाः न दृश्यंत ततः दैत्यानां शस्त्रास्त्र
वौघाः देवैः छिन्नाः ततः क्षीणास्त्रशस्त्रौघाः दैत्याः गिरिशृंग द्रुमोपलैः स्फुरबलं अभ्यवर्षन् तांश्च पूर्ववच्चिच्छिदुः तदा दैत्याः
विविधशस्त्रास्त्रैः द्रुमदृषदद्रिभिः अक्षतान् देवान् दृष्ट्वा तत्रसुः दैत्यैः देवगणेषु कृताः प्रयासाः सर्वे व्यर्थाः अभवन् तदा रणं वि-
सृज्य दैत्यान् पलायमानान् दृष्ट्वा देवान् अक्षतान् निशम्य वृत्रः दैत्यान् उवाच हे दैत्याः मद्वचः शृणुत जातस्य मृत्युः सर्वतः ध्रुव ए
व यस्य प्रतिक्रिया नास्ति किंच मृत्योः सकाशात् इह यशः स्वर्गश्च यदि स्यात् तर्हि एवं भूतं मृत्युं कः न वृणीत हे दैत्याः इह लोके शास्त्र
संमतौ द्वौ मृत्यू योगेन देहत्यागः १ युद्धे सन्मुखं मरणं २ एतौ द्वावपि स्वर्गदौ भवत इति ३३ इति षष्ठे दशमः १० श्रीशुक उवाच
एवं धर्मं शंसतः वृत्रस्य वचः दैत्याः न अगृण्हन् तदा कालानुकूलैः त्रिदशैः अनाथवत् काल्यमानां विशीर्यमाणां च पृतनां दृष्ट्वा ओजसा
तान् निवार्य निर्भर्त्स्यन् च उवाच शूराणां भीतवधः श्लाघ्यः न स्वर्ग्यश्च न हे क्षुद्राः देवाः यदि वः युद्धे श्रद्धा तर्हि मे अग्रे क्षणं तिष्ठत यदि इ
हलोकसुखेच्छा न चेत् एवं क्रुद्धः सन् देवान् स्वदेहेन भीषयन् महाशब्दं चकार यं श्रुत्वा लोकाः मूर्च्छां प्रापुः वृत्रशब्देन सर्वे देवगणाः
भूमौ निपेतुः तदा वृत्रः पद्भ्यां देवसैन्यं ममर्द तद्विलोक्य अमर्षितः इंद्रः स्वशत्रवे गदां चिक्षेप तदा वृत्रः प्राप्तां तां गदां वामकरेण गृ-
हीत्वा तयैव ऐरावत गंडस्थले जघान तत्कर्म सर्वे समपूजयन् ऐरावतः वृत्रगदाभिमृष्टः भिन्नमुखः सन् असृक् वमन् सप्तधनुः
प्रमाणं देशमपासरत् इंद्रः अमृतस्राविहस्तेन तं अभिमर्श्य गतव्यथः सन् उद्धाय अवतस्थे हे राजन् वृत्रः भ्रातृहणं वज्रायुधं इं
द्रं दृष्ट्वा उवाच हे इंद्र त्वं ब्रह्महा गुरुहा भ्रातृहा च अतः अद्य त्वां हत्वा अहं भ्रातृऋणात् मुक्तो भवामि हे इंद्र यः त्वं स्वर्गकामः सन्

द्विजस्य गुरोः नः अग्रजस्य शिरांसि पशोरिव खड्गेन अवृश्चः अतः श्वादिभिः गृध्रादिभिः उज्झितं मच्छूलविभिन्नदेहं अदग्धदेहं त्वां गृध्राः समदंति अन्ये ये उद्यतास्त्राः देवाः मह्यं प्रहरंति तान् त्रिशूलेन हत्वा भैरवादीन् यजामि अथ हे इंद्र त्वं वज्रेण मे शिरः यदि हरिष्यसि तर्हि देहेन भूतानां बलिं विधाय स्वर्गं यामि हे शक्र रे शमयि वज्रं कुतः न क्षिपसि गदेव वज्रं निष्फलं न स्यात् अयं ते वज्रः हरेस्तेजसा दधीचेस्तपसा च तीक्ष्णीकृतः अस्ति अतः तेनैव शत्रुं जहि यतः यत्र हरिस्तत्र विजयः भवति अहं संकर्षणचरणारविंदे मनः निधाय त्वद्वज्रहतः सन् योगिनां गतिं यास्यामि भगवति दत्तचित्तानां पुंसां स्वर्गादिसंपदः हरिः न ददाति यतः याभ्यः द्वेषादयो भवंति अतः अस्मत्पतिः पुरुषस्य त्रैवर्गिकायासनाशं करोति ततः आयासोपरमाङ्गवत्प्रसादोऽनुमेयः अथ भगवंतं प्रार्थयते हे-हरे अहं तवदासानुदासः भूयः भविष्यामि मे मनः तव गुणान् स्मरतु वाक् कीर्तयतु कायः तव कर्म करोतु हे ईश्वर त्वां पृथक् कृत्वा नाकपृष्ठादिकं नेच्छामि अजातपक्षाः खगाः यथा मातरं द्रष्टुं इच्छंति तथा हे हरे मे मनः त्वां द्रष्टुं इच्छति संसारचक्रे भ्रमतः मम भगवद्भक्तेष्वेव सख्यं भूयात् आत्मजदारगेहादिषु हे नाथ मे चित्तस्यासक्तिर्मा भूयात् २७ इति षष्ठे एकादशः ११ श्रीशुक उवाच

हे नृप एवं युद्धे देहं जिहासुः वृत्रः विजयात् मृत्युं वरं मन्यमानः शूलं प्रगृह्य सुरेंद्रं अभ्यपतत् ततः युगांताग्निवत् कठोरजिह्वं शूलं भ्रामयित्वा हे पाप हतोसि २ इत्युक्त्वा शूलं प्राक्षिपत् वज्री तत् प्रेक्ष्य शूलं तद्भुजं च वज्रेण अच्छिनत् तदा छिन्नैकबाहुः वृत्रः परिघेण इंद्रं इभं च हनौ तताड तदा इंद्रहस्तात् वज्रं पपात तदा वृत्रस्य तत् कर्म सर्वे अपूजयन् इंद्रस्य संकटं वीक्ष्य देवाः चुक्रुशुः इंद्रः च्युतं वज्रं लज्जया पुनर्न जगृहे तदवलोक्य वृत्रः आह हे इंद्र वज्रेण मां जहि अयं विषादकालः न परमात्मानं ईश्वरं विना अन्येषां युयुत्सतां सदा जयपराजयप्रमाणं न हे इंद्र इमे सपालाः लोकाः यस्य वशे स्थिताः संतः चेष्टंते सः कालः जयादौ कारणं तं कालं अज्ञा

यजयादौ देहं हेतुं मन्यते हे मघवन् यथा दारुमयी स्त्री एवं भूतानि ईशतंत्राणि विद्धि किंच पुरुषप्रकृत्यादयः यदनुग्रहादिना-
अस्यविश्वस्यसर्गादीनशक्नुवंति एवं अविद्वान् पुमान् अनीशं देहं स्वतंत्रं मन्यते किंच ईश्वरः भूतैः भूतानि सृजते तैर्ग्रसते च
किंच जयादिकालेपुरुषस्य आयुः श्रीकीर्त्यादयो भवंति तस्मात् जयपराजययोः मृत्युजीवितयोश्च सुखदुःखाभ्यां समः स्यात्
हे शक्र मृधे निर्जितमपि तव प्राणजिहीर्षया घटमानं मां पश्य हे इंद्र अयं प्राणपणः समरः अत्र अमुष्य जयः अमुष्य पराजयो वे
तिनज्ञायते श्रीशुकउवाच हे राजन् इंद्रः वृत्रवचः श्रुत्वा निष्कपटं तं संपूज्य ततः गृहीतवज्रः सन् तं आह अहो दानव
सिद्धोसि त्वं हरिभक्तोसि भवान् वैष्णवीं मायां अतार्षीत् यतः एवं ते भगवति भक्तिरस्ति श्रीशुकउवाच एवं अन्यो
न्यं ब्रुवाणौ इंद्रवृत्रौ युयुधाते वृत्रः परिघेण इंद्रं अताडयत् ततः इंद्रः तस्य परिघं वामकरं च चिच्छेद छिन्नहस्तः वृत्रः अधरोष्ठं
भूमौ उत्तरोष्ठं दिवि कृत्वा दंष्ट्राभिः जगत्त्रयं ग्रसन्निव ऐरावतेन सह वज्रिणं जिह्वया गृहीत्वा अगिलत् वृत्रग्रस्तं इंद्रं आलक्ष्य-
सर्वे देवाद्याः चुक्रुशुः इंद्रः नारायणकवचेन सन्नद्धः नममार किंच वज्रेण तत्कुक्षिं भित्वा निष्क्रम्य शत्रोः शिरः उच्चकर्त सव-
ज्रः परमवेगवान् सन् वर्षैकेन वृत्रशिरः न्यपातयत् तदा खे दुंदुभयो नेदुः गंधर्वादयः कुसुमैः अभ्यवर्षन् सर्वे इंद्रं अस्तुवन्
वृत्रदेहात् निर्गतं आत्मज्योतिः सर्वेषां पश्यतां भगवंतं समपद्यत ३५ इति षष्ठे द्वादशः १२ श्रीशुकउवाच एवं-
वृत्रे हते सति इंद्रं विना सर्वे देवर्षिगणाद्याः सुखिनः संतः स्वस्थानानि जग्मुः राजोवाच येन देवाद्याः सुखिनः अभवन्
तेन इंद्रस्य कुतो दुःखं अभवत् तत् श्रोतुमिच्छामि श्रीशुकउवाच देवाः वृत्रात् भीताः तद्वधाय इंद्रं प्रार्थयन् तदा इं-
द्रः उवाच हे देवर्षयः विश्वरूपवधोद्भवं एनः स्त्रीभूजलद्रुमैर्विभज्य गृहीतं अधुना इमां वृत्रहत्यां क्व मार्ज्मि श्रीशुकउवा॰

ततः ऋषयः इंद्रवचः श्रुत्वाऊचुः हेइंद्र हयमेधेनत्वांयाजयिष्याम माभैः हयमेधेननारायणंइष्ट्वा जगद्वधादपिमोक्ष्यसे ब्रह्महापितृ
हागोघ्नोमातृहाचार्यहा घवान् श्वादः पुल्कसकोवापि शुध्येरन् यस्यकीर्तनात् श्रीशुकउवाच इत्थंब्राह्मणाज्ञयारिपुंअ
हनत् तदैवब्रह्महत्याइंद्रंआससाद इंद्रः तांचांडालीमिव असृक् पटांमीनगंधांधावंतींआलोक्यब्रह्मांडं भ्रमित्वा मानससरो-
वरंप्रविष्टः तत्रपुष्करनालतंतुंप्रविश्यब्रह्मवधात् मोक्षंचिंतयन् वर्षसहस्त्रं उवासतावत् नहुषः त्रिणाकंशशास सः इंद्राण्याति
रश्वांगतिंनीतः सन् ब्रह्मशापात् अजगरोभूत् अथब्रह्मर्षयः तत्र एत्य इंद्रायदीक्षांदत्वाहयमेधंकारयित्वा ब्रह्मवधात् मोच-
यामासुः सःमरीचिप्रभृतिभिः यथोदितवाजिमेधेन यज्ञपतिंइष्ट्वा विधूतपापः आस इदंआख्यानं महेंद्रमोक्षं मरुत्व विजयं
अशेषपाप्मनांक्षालनंयेपठेयुः पर्वणि पर्वणि येशृण्वंतितेषांधन्यंयशस्यंनिखिलाघमोचनंरिपुंजयंस्वस्त्ययनं तथायुष्यंभव
ति २३ इतिषष्ठेत्रयोदशः १३ राजोवाच हेब्रह्मन् रजस्तमः स्वभावस्यपाप्मनः वृत्रस्य भगवति दृढामतिः कथंआ
सीत् देवादीनामपिमुकुंदचरणेभक्तिः प्रायः नजायते किंच इहजीवाः अनंताः संति तेषांमध्येकेचन धर्मंकुर्वंति तेषांमध्येपिके
चनमुमुक्षवः तेष्वपिकश्चित् संगात् मुच्यते मुक्तानामपिकश्चित् नारायणपरः एवंसतिवृत्रः पापः सन् कृष्णे दृढमतिः कथं
आसीत् अत्रनः संशयोस्तितंछिंधि श्रीशुकउवाच हेराजन् त्वंव्यासनारददेवलमुखात्श्रुतं इतिहासं शृणु शूर
सेनेषुदेशेषु कश्चिच्छूरः चित्रकेतुसंज्ञकः सार्वभौमोराजासीत् तस्यएककोटिभार्याः आसन् तासुसः संततिंनलेभे सर्वा-
स्तावंध्याएवदैवयोगेनमिलिताः तस्यरूपादिभिः संपन्नस्यापि वंध्यापतेश्चिंताभूत् तस्यसर्वाः संपदः प्रीतिहेतवः नाभव
न् एकदातस्यगृहे अंगिरानामऋषिः आगमत् तंराजापूजयामास तदाअंगिराउवाच हेराजन् तेस्वस्तिकिं प्रजाः धर्मेण पा

लयंतं त्वां चिंताग्रस्तं लक्षये      चित्रकेतुरुवाच      हे भगवन् तव किमपि अविदितं न तथापि वक्ष्ये लोकपालैः प्रार्थ्याः संप
दः संति तथापि अप्रजं मां न नंदयंति अतः पित्रादिभिः सह प्राप्तं नरकं यथा प्रजया तरेम तथा विधेहि      श्रीशुक उवाच
एवं राज्ञा प्रार्थितः अंगिराः त्वाष्ट्रं चरुं श्रपयित्वा त्वष्टारं अयजत् ततः सर्वस्त्रीणां मध्ये ज्येष्ठाया कृतद्युतिः तस्यै यज्ञोच्छिष्टं च
रुं अदात् आह च हे राजन् तव हर्षशोकप्रदः एकः पुत्रो भविष्यति इत्युक्त्वा सः ययौ सा चरुप्राशनात् चित्रकेतोः गर्भं अधारय
त् अथ काले कुमारः अजायत तदा हृष्टो राजा विप्रैः जातकं कारयित्वा तेभ्यः हिरण्यं ग्रामान् हयान् गजान् धेनूनां षडर्बुदानि अदात्
अन्वहं मातापित्रोः स्नेहः पुत्रे अवर्द्धत अन्यस्त्रीणां प्रजाकामज्वरः अभवत् ताः आत्मानं गर्हयामासुः अहो अप्रजां स्त्रियं धि
क् इत्यादि एवं सपत्न्याः पुत्रसंपदा दह्यमानानां बलवान् विद्वेषः अभूत् तेन नष्टमतयः दारुणचेतसः स्त्रियः कुमाराय गरं ददुः
सा कृतद्युतिः सपत्नीनां कर्म अजानती बालः सुप्त एवेति चिंतयती गृहे व्यचरत् बालं बहुकालं शयानं लक्ष्य पुत्रमानयेति धात्रीं
अचोदयत् सा शयानं बालकं उपव्रज्य तं मृतं दृष्ट्वा हतास्मीति उच्चैः शब्दं कृत्वा भुवि न्यपतत् तस्याः दीनं शब्दं श्रुत्वा राज्ञी त्व-
रया तदंतिकं आगत्य मृतं पुत्रं दृष्ट्वा भूमौ निपपात सुमोह शुशोच ततः अंतःपुरवर्तिनः नराः नार्यश्च रुरुदुः सपत्न्यश्च व्यलीकं
रुरुदुः नृपः पुत्रं मृतं श्रुत्वा पदे पदे प्रस्खलन् तत्रागत्य बालस्य पादमूले पतित्वा दीर्घं श्वसन् बाष्पकलया रुद्धकंठः भाषितुं न श
शाक ततः राज्ञी शुचार्पितं पतिं मृतपुत्रं च वीक्ष्य केशान् विकीर्य शुशोच आह च अहो विधातः त्वं अज्ञोसि यः आत्मसृष्टेः अ-
ननुरूपं चेष्टसे वृद्धे जीवति सति बालस्य मृतिरिति किंच एवं सति तव सृष्टिः नष्टा स्यात् इत्यादि हे तात कृपणां मां त्यक्तुं नार्ह १०
सि शोकतप्तं पितरं पश्य किंच अकरुणेन यमेन सह दूरं न याहि हे तात उत्तिष्ठ इमे ते वयस्याः शिशवः त्वां क्रीडितुं आह्वयंति

क्षुधार्तः त्वंमेत्तन्नं भुंक्ष्व स्वकानांशरुचः हर इदानीं ते कलाः गिरः न श्रृणोमि यतः यमेन त्वंदूरंनीतोसीत्यादि श्रीशुकउवाच
हेराजन् चित्रकेतुः मृतंपुत्रंवीक्ष्य तप्तः सन् रुरोद एवंदंपत्योः विलपतोः सर्वेजनाः रुरुदुः एवं वर्तमानंज्ञात्वा सनारदः अं
गिराः आजगाम ६१ इतिषष्ठेचतुर्दशः १४ श्रीशुकउवाच मृतबालकसमीपे शोकाभिभूतं पतितं राजानंबोधयं
तौ नारदांगिरसौऊचतुः हेराजेंद्र त्वं यं अनुशोचसि अयंतेकः अस्यपूर्वजन्मसुकलमः पितासि अयंमेपुत्रः अहमस्यपिता ए
वंनियमः कालत्रयेन यथाप्रवाहवेगेन वालुकाः संयुज्यंते वियुज्यंते तथाकालवेगेनजीवा अपि यथाधानानांजन्यजनकत्वे-
पि पितृपुत्रभावोनास्ति एवंजीवस्यापि अतः शोकेन कार्यं किंच एतेवर्तमानकालीनाः चराचराः वयंचत्वंच इमेजन्मनः प्रा
क् मृत्योः पश्चाच्च यथा न संति तद्वदधुनापि भगवान् भूतैः भूतानि लीलयासृजति अवति अत्ति हेराजन् पितुर्देहेनपुत्रदेहः
मातृदेहात् जायते यथाबीजात् बीजं जीवस्तु शाश्वतः एव अयंपितृपुत्रादिविभागः अविवेककृतोस्ति अतः शोकं माकुरु-
इत्यादि श्रीशुकउवाच एवंतैः आश्वासितोराजा पाणिनावक्त्रंनिमृज्य उवाच युवांज्ञानसंपन्नौ अवधूतवेषेणगू
ढौको भगवद्भक्ताः ब्राह्मणाः मादृशां अज्ञानांबोधाय भूमौ चरंति तेचकुमाराः नारदः ऋभुः अंगिराः देवलः असितः अपांतर
तमः व्यासः मार्कंडेयः गौतमः वसिष्ठः परशुरामः कपिलः दुर्वासाः याज्ञवल्क्यः जातूकर्ण्यः आरुणिः रोमशः च्यवनः दत्तः आ
सुरिः पतंजलिः वेदशिराः बोध्यः पंचशिराः हिरण्यनाभः कौशल्यः ऋतदेवः ऋतध्वजः एतेअन्येचेति युवयोः एष्वेवांतर्गतत्व
मस्ति अतः ग्राम्यपशोः अंधेतमसिमग्नस्य ममज्ञानदीपः उदीर्यताम् अंगिराउवाच हेनृपपुत्रकामस्यतेपुत्रदोयः सए
वाहमंगिरास्मि अयंतुनारदः पुत्रशोकेमग्नंत्वांज्ञात्वा अनुग्रहाय आवांप्राप्तौ ब्रह्मण्यः भगवद्भक्तः दुःखंप्राप्तुंनार्हति किंच

अहंपूर्वमेवतेज्ञानोपदेशार्थंप्राप्तः तदातुते अन्याभिनिवेशंज्ञात्वापुत्रमेव अदाम् इदानींपुत्रवतांयस्तापः सः त्वयैव अनुभूय-
ते एवंदारादयः गृहाः विविधैश्वर्यसंपदः सर्वेप्येतेशोकमोह भयप्रदाः स्वप्नमायामनोरथाइव मिथ्यासंति अतःस्वस्थेन मन
सा आत्मन् स्त त्वंविमृश्य द्वैतेस्थिरविश्वासंत्यज उपशमंआश्रय नारदउवाच हेराजन् मत्तः एषांमंत्रोपनिषदंगृहा
णयांधारयन् सप्तरात्रात् संकर्षणंविभुंद्रक्ष्यसि शर्वादयः यत्पादमूलंउपसृत्य भ्रमंविसृज्य महित्वंआपुः तथाभवानपिअ-
चिरात् उपैष्यति २८ इतिषष्ठेपंचदशः १५ श्रीशुकउवाच हेराजन् अथदेवर्षिः मृतंनृपात्मजंज्ञातीनांदर्शयित्वा-
उवाच हेजीवात्मन् मातरंपितरंशोचतः सुहृदांश्चपश्यपश्य स्वंकलेवरंआविश्यपितृदत्तान्भोगान् भुंजन् नृपासनंअधि
तिष्ठ जीवउवाच कर्मभिः देवतिर्यङ्नृयोनिषु भ्राम्यमाणस्यमेकस्मिन्जन्मनि अमीपितरः मातरः अभवन् यथा
पण्यानिवस्तूनिव्यवहर्तृषुइतस्ततःपर्यटंति तथाजीवः कर्मणाभ्रमति एवंचजीवोनित्यः सर्वेंद्रियसाक्षीस्वतंत्रोस्ति एवंभूत
स्यममयुष्माकंच संबंधाभावात् शोकंमाकुरु श्रीशुकउवाच इत्युक्त्वदीर्यजीवोगतः ततः सर्वेशोकंमुमुचुः मृतबालस्य
क्रियाश्चक्रुः तत्रबालघ्न्यः स्त्रियः ब्राह्मणैः निरूपितं बालहत्याव्रतंयमुनायांचक्रुः एवंद्विजोक्तिभिः प्रतिबुद्धात्मा चित्रकेतुः
गृहांधकूपात् निष्क्रम्यकालिंद्यांस्नात्वासंयतप्राणः ब्रह्मपुत्रौ अवंदत अथनारदः प्रपन्नायतस्मै एतांविद्यांउवाच नमस्तुभ्यं
भगवतेवासुदेवायधीमहि प्रद्युम्नायानिरुद्धायनमः संकर्षणायच आत्मारामायपरमानंदमूर्तयेनमः हृषीकेशायविश्वमू
र्तयेनमः इंद्रियेषूपरतेषुयः प्रकाशतेसःसदसत्परः नः अव्यात् यस्मिन् इदंजगत् तिष्ठति जायते नश्यतिच तस्मैब्रह्मणेनमः किं ११
च बुध्यादयः यंनविदुः तंहरिंननोस्मि ॐनमोभगवतेमहापुरुषायमहाविभूतिपतयेतेनमोस्तु श्रीशुकउवा॰ नारदः भक्तायएनां

विद्यां आदिश्य अंगिरसा सह ब्रह्मलोकं ययौ चित्रकेतुः अब्भक्षः सन् नारदभाषितां विद्यां सप्ताहं धारयामास ततः धार्यमाणा
या तया विद्यया सप्तरात्रांते विद्याधराधिपत्यं लेभे ततः कतिपयैः दिवसैः शेषस्य चरणांतिकं जगाम ततः तत्र नीलांबरं किरीटादि
भिर्भूषितं प्रभुं ददर्श तद्दर्शन ध्वस्तसमस्तकिल्बिषः प्रवृद्धभक्त्या अश्रुलोचनः सन् तं नत्वा प्रेमाश्रुलेशैः प्रभोरासनं अभिषिं
चन् स्तोतुं न शशाक ततः मनः समाधाय जगद्गुरुं अस्तौत् चित्रकेतुरुवाच हे अजित सममतिभिः साधुभिः त्वं जितोसि-
ते च त्वया जिताः हे भगवन् अयं आंडकोशः क्षित्यादिभिः सप्तावरणैः आवृतः सन् त्वयि अणुवत् परिभ्रमति तस्मात्त्वं अनंतोसि
किंच येन रपशवः तवेंद्रादिविभूतीः उपासते न त्वां तेषां आशिषः नश्यंति विषयकामे नापि कृता त्वत्सेवा मोक्षफलैव भवति हे
भगवन् यदा भवान् भागवतं धर्मं आह तदा त्वया जितं जितं यतः यस्मिन् धर्मे विषममतिर्नास्ति हे भगवन् त्वद्दर्शनात् नृणां पा
पक्षयः इदं अघटितं न यतः यन्नामस्मरणात् पुल्कसोपि संसारान्मुच्यते हे अनंत यस्य ते मूर्ध्नि इदं भूमंडलं सर्षपायति तस्मै
ते सहस्रमूर्ध्ने नमोस्तु श्रीशुकउवाच एवं स्तुतः अनंतः विद्याधरपतिं उवाच नारदांगिरोभ्यां उक्तोपदेशरूपविद्यया-
त्वं सिद्धोसि मे दर्शनात् च इह मानुषीं योनिं लब्ध्वा यः आत्मानं न बुध्येत सः कुत्रापि सुखं नाप्नुयात् किंच कविः इच्छायां परि
क्लेशं स्मृत्वा अनीहायां अभयं च स्मृत्वा संकल्पात् विरमेत् किंच दंपती सुखाय दुःखमोक्षाय क्रियाः कुर्वते ततः दुःखनिवृत्तिः
सुखप्राप्तिश्च न भवति एवं विपर्ययं बुध्वा आत्मनश्च सूक्ष्मां तुरीयां गतिं बुध्वा दृष्टश्रुतैः विषयैः मुक्तः सन् ज्ञानविज्ञानतृप्तः मम भ
क्तो भवेत् इत्यादि एवं मम वचः धारयन् ज्ञानविज्ञानसंपन्नः त्वं आशु सिद्ध्यसि श्रीशुकउवाच एवं श्रीहरिः चित्रकेतुं
आश्वास्य अंतर्दधे ६५ इति षष्ठे षोडशः १६ श्रीशुकउवाच चित्रकेतुः यस्यां दिशि हरिः अंतर्हितः तस्यै दिशे नमः

कृत्वागगनेचरः चचार सः अव्याहतबलेंद्रियः सिद्धादिभिस्तूयमानः सर्वस्थानेषु भ्रमन् विद्याधरस्त्रीभिः सह हरिंगायन् व
र्षाणांलक्षंरेमे एकदाविष्णुदत्तविमानेन भ्रमन् गिरिशंददर्श मुनिसंसदि देवीं आलिंग्यस्थितंशिवं दृष्ट्वादेव्याः शृण्वंत्याःउ
च्चैः हसित्वाउवाच चित्रकेतुरुवाच अयंसाक्षात्लोकगुरुः ब्रह्मवादी नृणांधर्मवक्ता सन् सभायांभार्यांअंगेकृत्वआ
स्ते यथाप्राकृतः प्राकृताअपिप्रायःस्त्रियंरहसिबिभ्रति अयंसदसिबिभर्त्तिकिमाश्चर्यम् एवंतद्वचःश्रुत्वाशिवःसभ्याश्च
तूष्णींआसन् श्रीशुकउवाच इतिश्रुत्वाअभिमानवते तस्मै पार्वतीउवाच लोकेअधुना अयंदंडधरः अस्मद्विधानांनि
र्लज्जानांशास्ताकिम् ब्रह्मादयः धर्मं नविदुः ये शास्त्रमुल्लंघ्य वर्तमानं हरं ननिषेधंति योयंक्षत्रबंधुः सूरीन्परिभूयशिवंशा
स्ति अतःनिश्चयेन अयंदंड्यः अयंवैकुंठमूलोपसर्पणंनार्हति हेदुर्मते त्वं आसुरींयोनिंयाहि यथापुनःमहतांकिल्बिषंनकर्ता
श्रीशुकउवाच एवंशप्तःचित्रकेतुःविमानात् अवरुह्यसतींमूर्ध्ना प्रसादयामास चित्रकेतुरुवाच हे अंबिके ते
शापं अहं अंजलिना प्रगृह्णामि मर्त्यायदेवैः यत् प्रोक्तंतत् तस्यपूर्वदिष्टमेव एतस्मिन् संसारे अज्ञानमोहितः जंतुः सर्वत्र-
सुखंदुःखंच भुंक्ते अस्य सुखदुःखस्य कर्ता नात्मा न परश्च किंतु ईश्वर एव सः एक एव मायया भूतानि सृजति एषांबंधंमो-
क्षं सुखंदुःखंच सृजति तस्य कश्चित् दयितो नरिपुर्न अतः सर्वत्र समस्य तस्य सुखेन प्रीतिर्नास्ति तदारोषः कुतः तथापि
तन्मायया यत् पुण्यपापादिकर्म तत् एषांशरीरिणां सुखाद्यर्थं समर्थं भवति सुखदुःखादिसर्वं मायाजनितमस्ति हे देवि शापमो
क्षायत्वांनप्रसादये ममोक्तं साध्वपि असाधुवत् मन्यसे तत्क्षम्यतामित्युक्त्वासः जगाम ततः सर्वेषांशृण्वतांरुद्रः रुद्राणीं अब्रवीत् १२
हे सुश्रोणि हरेः भक्तानां माहात्म्यं दृष्टवत्यसि नारायणपराः कुतश्चनबिभ्यति ते सर्वत्र समदर्शिनः संति ईश्वरस्य ईहितं अस्मदाद

यः नविदाम तस्य भक्तः सः अहंच विष्णुभक्तः अतः मम तस्मिन् क्रोधो माभूत् तस्मात् भक्तेषु तत्त्वया विस्मयो न कार्यः श्रीशुकउ०

इति शिवभाषितं श्रुत्वा उमा शांतधीः बभूव अहो चित्रकेतुर्भगवद्भक्तः शक्तुं समर्थोपि शापमेव जगृहे एतावत् साधुलक्षणं हे राजन् स दानवीं योनिमाश्रितः ज्ञानविज्ञानसंयुतः वृत्र इति ख्यातः त्वष्टुर्दक्षिणाग्नौ जज्ञे एतत् ते कथितम् इमं चित्रकेतोः इतिहासं विष्णुभक्तमाहात्म्यं श्रुत्वा बंधात् मुच्यते यः एतत् प्रातः शृणुयात् पठेद्वा हरिं स्मृत्वा परां गतिं याति ४१ इति षष्ठस्कंधे सप्तदशः १७ श्रीशुकउवाच अथ सवितुः ५ पत्नी पृश्निः सावित्रीं व्याहृतीः त्रयीम् अग्निहोत्रं पशुं सोमम् चातुर्मास्यम् महामखान् असूत भगस्य ६ सिद्धिः भार्या महिमानं विभुम् प्रभुम् असूत आशिषं कन्यां च धातुः ७ भार्याः ४ सिनीवाली दर्शम् कुहूः सायं राका प्रातः अनुमतिः पूर्णमासम् एवं ताः प्रासूयंत विधातुः ८ क्रिया पुरीष्यान् अग्नीन् आधत्त वरुणस्य चर्षणी भृगुं वाल्मीकिं प्रासूत मित्रस्य १० रेवती उत्सर्गारिष्टपिप्पलान् असूत अगस्त्यवसिष्ठौ मित्रावरुणयोः पुत्रौ अभूतां यतः उर्वश्याः सन्निधौ उभावपि स्कन्नं रेतः कुंभे सिषिचतुः इंद्रस्य ११ पौलोमी जयंतऋषभमीढुषान् असूत उरुक्रमस्य १२ कीर्तिः बृहच्छ्लोकं तस्य सौभगादयः पुत्राः आसन् अथ कश्यपपुत्रान् दैत्यांस्ते कीर्तयामि यत्र भागवतः प्रह्लादो बलिश्च जातः दित्यां हिरण्यकशिपुः हिरण्याक्षश्च जातौ हिरण्यकशिपोः कयाध्वां पुत्राः ४ संह्लादः ह्लादः अनुह्लादः प्रह्लादः सिंहिका कन्या च तां विप्रचित् जग्राह तत्सुतो राहुः यस्य शिरः हरिः अहरत् संह्लादात् कृत्यां पंचजनः ह्लादात् धमन्यां इल्वलः वातापी च अनुह्लादात् सूर्म्यायां बाष्कल महिषौ प्रह्लादात् देव्यां विरोचनः ततो बलिः ततः बाणज्येष्ठं पुत्रशतं कश्यपात् दित्यां मरुतः ४९ अभवन् ते इंद्रेण समानरूपतां नीताः राजोवाच हे गुरो ते आसुरं भावं हित्वा कथं देवत्वं प्राप्ताः इदं कथय श्रीशुकउवा० एकदा हतपुत्रादिभिः पुत्रहंतारं घातयित्वा कदा सुखं शयेइ-

तिमनसिकृत्वा स्त्रीचेष्टितैः परमभक्त्या शुश्रूषया च पतिं कश्यपं वशमकरोत् एवं स्त्रिया जडीभूतः सः विद्वानपि बाढमित्याह तच्चित्रं
न यतः प्रजापतिः स्वदेहार्द्धं चक्रे यया पुंसां मतिर्हृता एवं शुश्रूषितः कश्यपः प्रहस्य प्रीतः सन् दितिं आह हे वामोरु अहं ते प्रीतोस्मि स्त्री
णां दैवतं पतिरेव किंच सर्वभूतानां पतिः वासुदेवः स एव पतिरूपेण स्त्रीभिः पूज्यते तस्मात्पतिव्रताः स्त्रियः अनन्यभावेन ईश्व-
रं पतिं यजंते सः अहं त्वयार्चितः अतः हे भद्रे ते कामं संपादये दितिरुवाच हे ब्रह्मन् अहं मृतपुत्रा येन मे सुतौ घातितौ तं इंद्रहंता
रं मृत्युहीनं पुत्रं वृणे श्रीशुकउवाच एवं तस्याः वचो निशम्य कश्यपः अतप्यत अहो अधर्मः सुमहान्प्राप्तः योषिन्मय्यामा
यया गृहीतचेताः अहं ध्रुवं नरके पतिष्ये अतः अबुधं मां धिक् किंच शरत्पद्मोत्सवं वक्त्रं वचश्च श्रवणामृतं हृदयं क्षुरधाराभं स्त्री
णां को वेद चेष्टितम् स्त्रीणां कोपि प्रियः न यतः स्वार्थे पत्यादीन् घ्नंति अस्तु मया अनुददामीत्युक्तं तत् मृषा मा भूत् इंद्रोपि वधं नार्हति
तत्रेदं योग्यम् एवं विचार्य कश्यप उवाच हे भद्रे संवत्सरं व्रतं यदि धारयिष्यसि तर्हि इंद्रहा पुत्रो भविता व्रतवैगुण्ये देवबांध-
वो भविष्यति दितिरुवाच हे ब्रह्मन् व्रतं धारयिष्ये कर्तव्याकर्तव्यं कथय कश्यप उवाच भूतानि न हिंस्यात् न शपे
त् मिथ्या न वदेत् नखरोमाणि न छिंद्यात् अस्पृश्यं न स्पृशेत् अप्सु प्रविश्य न स्नायात् दुर्जनैः सह न संभाषेत अधौतं वासो न
विधृतां स्रजं पुनः न धारयेत् उच्छिष्टं चंडिकान्नं मांसं शूद्राहृतम् रजस्वलादृष्टं अन्नं न भुंजीत अंजलिना अपः न पिबेत् उ
च्छिष्टा अस्पृष्टसलिला संध्यायां मुक्तकेशा मंडनहीना असंयतवाक् अप्रावृता बहिर्न गच्छेत् अधौतपादा अप्रयता आर्द्र-
पात् उदक्शिराः पश्चिमशिराः अन्यैः सह नग्ना संध्ययोः न शयीत धौतवासाः शुचिः सर्वमंगलयुता भोजनात् प्राक् गोविप्रा १२
न् श्रियं अच्युतं पूजयेत् सुवासिनीश्च पूजयेत् पतिं च अभ्यर्च्य उपतिष्ठेत् ध्यायेत् इदं पुंसवन व्रतं संवत्सरं यदि धारयिष्यसि

तर्हि शक्रहा पुत्रः भविता सा बाढमित्युक्त्वा कश्यपात् गर्भं व्रतं दधार तदा इंद्रः मातृष्वसुः अभिप्रायं ज्ञात्वा दितिं शुश्रूषणं चक्रे व
नात् फलमूलादीनि आहरत् इंद्रः तस्याः व्रतच्छिद्रं प्रेप्सुः जिह्मः पर्यचरन् व्रतच्छिद्रं नाध्यगच्छत् तदा मे शिवं केन स्यात् इति चिं
तां आप एकदा सा उच्छिष्टा अस्पृष्टवार्य धौतांघ्रिः विधिमोहिता संध्यायां सुष्वाप इंद्रः तदंतरं लब्ध्वा योगमायया दितेः उद
रं प्रविश्य गर्भं सप्तधा चकर्त ते सप्तधा भूताः रुरुदुः पुनः एकैकं मा रोदीः इत्युक्त्वा सप्तधा च कर्त तदा ते ऊचुः हे इंद्र वयं मरुतः
ते भ्रातरः नः कुतः जिघांससि तदा इंद्र आह यूयं चेत् मम भ्रातरः तर्हि मा भैष्ट एवं सति दितेर्गर्भः वज्रेण क्षुण्णोपि श्रीनि
वासानुकंपया न ममार यथा ब्रह्मास्त्रेण भवान् ते मरुतः इंद्रेण सह पंचाशद्देवा अभवन् एवं ते मातृदोषं व्यपोह्य हरिणा सो
मपाः कृताः ततो दितिः उत्थाय इंद्रेण सह अग्निप्रभान् कुमारान् दृष्ट्वा संतोषं आप अथ दितिः इंद्रं आह हे तात आदित्यानां भ
यदं एकं पुत्रं इच्छंती व्रतं अचरं ते सप्तधा कथं अभवन् हे पुत्र यदि त्वया सत्यं ज्ञातं तर्हि कथय इंद्र उवाच हे अंब ते व्यव
सितं ज्ञात्वा व्रतच्छिद्रं लब्ध्वा अंतरं गत्वा सप्त सप्तधा गर्भः छिन्नः तावंतः पुत्रा जाताः महापुरुषपूजायाः सिध्या तेन मृताः तदि
दं बालिशस्य मम दौरात्म्यं क्षंतुमर्हसि श्रीशुक उवा० तदा दितिः तस्य शुद्धभावं दृष्ट्वा एतान् बंधुत्वेन पालय तव साहाय्यं क
रिष्यंति इत्याह ततः इंद्रः तां नत्वा मरुद्भिः सह दिवं ययौ हे राजन् एवं ते मरुतां जन्म आख्यातं भूयः किं कथयामि ७८ इ
ति षष्ठे ष्टादशः १८ राजोवाच हे ब्रह्मन् भगवता यत् पुंसवनव्रतं कथितं तत्प्रकारं ज्ञातुमिच्छामि कुतः येन विष्णुः प्रसीद
ति श्रीशुक उवाच मार्गशीर्षशुक्लपक्षप्रतिपदि स्त्री भर्तुरनुज्ञया इदं सार्वकामिकं व्रतं आरभेत मरुतां जन्म श्रुत्वा ब्रा
ह्मणाज्ञया स्नात्वा शुक्लवस्त्रे धृत्वा अलंकृता सती प्रातः श्रिया सह भगवंतं पूजयेत् अलं ते निरपेक्षाय यथा त्वं कृपयेति मंत्राभ्यां

विष्णुपत्नि महामायेत्यनेन च भगवंतं श्रियं च नमस्कृत्य ॐ नमो भगवते महापुरुषायेति मंत्रेण षोडशोपचारैः पूजयेत् ततः
ॐ नमो भगवते महापुरुषायेति मंत्रेण अनले हविः शेषेण द्वादशाहुतीर्जुहुयात् श्रियं विष्णुं च भक्त्या नित्यं संपूज्य भूमौ दंडव
त् प्रणम्य दशवारं मंत्रं जपेत् युवां सर्वजगतः कारणम् इयं सूक्ष्मा प्रकृतिः तस्याः साक्षात् अधीश्वरस्त्वं असि इत्यादिना स्तुत्वा
उपहरणं निःसार्य आचमनं दत्वा पुनः अर्चयेत् ततः स्तोत्रेण स्तुत्वा यज्ञोच्छिष्टं आघ्राय पुनरर्चयेत् परमभक्त्या पतिं च भजेत्
इदं व्रतं दंपत्योर्मध्ये एकेन कृतं उभयोरपि भवति इदं विष्णोर्व्रतं बिभ्रत् कथं च न न विच्छिंद्यात् ततः विप्रान् सुवासिनीश्च स्र-
गंधादिभिर्नित्यं अर्चयेत् देवं उद्वास्य तन्निवेदितं अद्यात् एवं द्वादशमासान् नीत्वा कार्तिके चरमेहनि उपवसेत् श्वः प्रातः अप
उपस्पृश्य कृष्णं च अभ्यर्च्य पयः शृतेन घृतमिश्र चरुणा यथाविधि पतिः द्वादशाहुतीर्जुहुयात् द्विजाशिषो गृहीत्वा प्रणम्य
आचार्यं पुरः कृत्वा बंधुभिः सह भुंजीत पत्न्यै चरोः शेषं दद्यात् एवं कृते पुमान् इष्टार्थं लभते स्त्री तु सौभाग्यं श्रियं प्रजां जीवप
तिं यशः गृहम् कन्या तु उत्तमं वरम् विधवा सद्गतिम् मृतप्रजा जीवसुता भवति दुर्भगा सुभगा स्यात् विरूपा रूपं लभते रो
गी आरोग्यं लभते एतत् पठन् अभ्युदयकर्मणि पितृदेवानां तृप्तिर्भवति ते तुष्टाः संतः सर्वकामान् यच्छंति अग्निः श्रीः हरिश्च हे
राजन् मरुतां पुण्यं जन्म दिते व्रतं च ते कथितम् २७ इति षष्ठस्कंधे एकोनविंशोऽध्यायः १९ इति षष्ठस्कंधः समाप्तः
श्रीकृष्णार्पणमस्तु शुभं भवतु